* श्रीशोऽव्यान्नः *

# नित्यपार्थिवपूजाविधिः

संस्कृतहिन्दीभाषाद्वयनिबद्धः ।



लेखकः

ज्यौतिषाचार्यो विद्यारत्नं धर्मशास्त्री

दुर्गाचरणशुक्लः

ज्यौतिषकार्यालयाध्यक्षः



वि० संवत् १९९४ ई० सन् १९३७

प्रकाशक

लोकहितकारक कम्पनी,

६७/२१, दौलतगंज,

कानपुर ।

प्रथमवार १००० प्रति

वि० सं० १९९४

मूल्य प्रति पुस्तक =)॥

॥ श्रीशोऽव्यात्नः ॥

श्रीगणेशाय नमः ॥ उमाकान्त विरूपाक्ष नीलकण्ठ सदाशिव । मृत्युञ्जय महादेव यद् भद्रं तन्न आसुव ॥ १ ॥ अथ पार्थिवपूजाविधिः । तिथितत्वे भविष्ये—मृद्भस्म गोशकृत्पिडं ताम्र कांस्यमयं तथा । कृत्वा लिङ्गं सकृत्पूज्य वसेत् कल्पायुतं दिवि ॥ १ ॥ वार्क्षं वित्तप्रदं लिङ्गं स्फाटिकं सर्व कामदम् ॥ नर्मदागिरिजं श्रेष्ठ मन्यद्वापि हि लिङ्गवत् ॥ २ ॥ लिंगवल्लिंगाकारम् । तेन नार्मदादेरपि लिंगस्य नाकारस्य न पूज्यतेति ॥ हेमाद्रौ मात्स्ये—रत्नजं हेमजं लिङ्गं पारदं स्फाटिकं तथा । पार्थिवं पिष्ट पौष्पं वा सर्वाभीष्ट प्रदायकं ॥ पौष्पं लिङ्गं सहायभूतमृदापि केवल पुष्पैस्तदसम्भवात् ॥ तत्रैव नन्दिपुराणे—आयुष्मान्धनवान् श्रीमान् पुत्रवान धान्यवान्सुखी । वरमिष्टं लभेल्लिङ्गं पार्थिवं यः समर्चयेत् ॥ १ ॥ तस्मात्तु पार्थिवं लिङ्गं ज्ञेयं सर्वार्थसाधकम् ॥ तत्रैव शिवधर्मे । वालुकानि च लिङ्गानि कारयेत्पार्थिवानि च । सहस्रपूजनात्सोपि लभते वाञ्छितं फलम् ॥ १ ॥ युगपद्बहुपूजने विशेषो रुद्रयामले—एवमन्तं विधायाथ पूर्ववत् पिण्ड शेषतः ॥ अवशिष्टानि रचयेत्प्रतिष्ठान्तं च पूर्ववत् ॥ कृत्वाथवा पृथक् पिण्डान् प्रथमं लिङ्ग संख्यया ॥ मन्त्रैस्तदीय निर्माण प्रमुखं तु ततश्चरेत् ॥ मृदाहरणादि प्रतिष्ठान्त मेकैकस्य कुर्यादित्यर्थः ॥ अथवा मृदाहरणं सकृत् कृत्वा पूजनीय लिंग सम संख्यया पिण्डान् कृत्वा संघट्टनादि पूजान्तं प्रत्येकं कुर्यादित्यर्थः ॥ तत्रैव कालकौमुद्याम् ॥ अक्षादल्पपरीमाणं न लिङ्गं कुत्र चिन्नरः । कुर्वीताङ्गुष्ठतो ह्रस्वं न कदाचित्समाचरेत् । अक्षोशीतिर्न रक्तिकाः ।

ते षोडशाक्ष इत्यमरात् । इदं च परिमाणं प्रधानलिङ्गस्य न वेदिकायाः । इह अङ्गुष्ठ शब्देन अङ्गुष्ठबृहत्पर्वग्रन्थिरुच्यते । अङ्गुष्ठाङ्गुलिमानं तु यत्रयत्रोपदिश्यते । तत्र २ बृहत्पर्व-ग्रन्थिभिर्मानयेत्सदा ॥ इति छन्दोगपरिशिष्टात् ॥ अंगुष्ठ-मानमंगुलिमानं वेत्यर्थः ॥ तत्रैव गौतमः—रात्रावुदङ्मुखः कुर्याद्देवकार्यं सदैव हि । शिवार्चनं सदाप्येवं शुचिः कुर्यादुदङ्मुखः । सदादिवारात्रौ चेति शान्तिसारे दिनकरभट्टः । लैङ्गे—विनाभस्मत्रिपुण्ड्रेण विनारुद्राक्षमालया । पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः । तस्मान्मृदापि कर्तव्यं ललाटे वै त्रिपुण्ड्रकम् ॥ ॐ ह्रूं नमः ॥ इतिरुद्राक्षान्प्रत्यभिमन्त्र्य मालां धारयेदित्युक्तम् ॥ तत्रैव पूजाधिकारार्थं पंचाक्षर मन्त्रजपउक्तः ॥ तत्रैव भविष्ये—अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा । महापातकयुक्तो वा मन्त्रस्यास्य जपोयथा ॥ अधिकारीभवेत्सर्व इति देवोऽब्रवीच्छिवः । इति तथार्थो यथापदात् । इ० शा० दिनकरभट्टः ॥ तत्रैव ब्राह्मे—यावन्नदीयतेचार्घ्यं भास्कराय-निवेदितम् ॥ तावन्नपूजयेद्विष्णुं शंकरं वा सुरेश्वरम् ॥ देवी-पुराणे तुविशेषोऽत्र ॥ मृदाहरण[१] संघट्ट[२] प्रतिष्ठा[३]ह्वान[४] मेव च ॥ स्नपनं[५] पूजनं[६] चैव विसर्जन[७]मतः परम् ॥ हरो[१] महेश्वर-श्चैव[२] शूलपाणिः[३] पिनाकधृक्[४] ॥ *शिवः[५] पशुपतिश्चैव[६]महादेव[७] इति स्मृतः ॥ नामक्रमेण पूर्वोक्त कर्माणि तनुयात् सुधीः ॥ पूजनं गन्धादिदानम् ॥ प्रतिष्ठाह्वानयोरदृष्टार्थत्वात्पाठक्रम एव । यद्यप्यत्रनामान्येव विनियुक्तानि तथापि "ध्यात्वा प्रणवपूर्वं तु तत्रनाम्ना समाहितः ॥ नमस्कारेण पुष्पादि विन्यसेच्च पृथक्

---

* इह "पशुपतिः५ शिवश्चैव६" इति पाठः समीचीनः प्राचीनश्च, सं० रत्नमाला शान्तिसार रुद्रयामलादिषु तथोपलब्धेः मूलधृतः पाठस्तु नवीनाचार्यं परिगृहीतः ॥

पृथक्" ।। इति सामान्यवाक्यान्नमोऽन्तता ज्ञेया । पूजने च यद्यपिशिवनामोक्तं तथा तद्युक्त पञ्चाक्षरोग्राह्यः । इत्युक्तं शान्तिसारे ।। तथाच नन्दिपुराण वचनम्—गोभूहिरण्य वस्त्रादि बलिपुष्पनिवेदने । ज्ञेयो नमः शिवायेति मन्त्रः सर्वार्थ साधकः ।। इति । पंचाक्षरस्यनमोन्तत्वाभावात्पुनर्नमः शब्दो वाच्य इत्युक्तं तत्रैव नमः शब्दस्य दानार्थत्वात्पूर्वस्थित नमः शब्देन तत्सिद्धेः । इति शान्तिसारे दिनकरभट्टः ।। इह विसर्जनात् पूर्ववामावर्तेन अष्टमूर्तिपूजोक्ता हेमाद्रौभविष्ये रुद्रयामलेच—शर्वाय क्षितिमूर्तये नमः । भवाय जलमूर्तये नमः । रुद्रायाग्निमूर्तये० । उग्राय वायुमूर्तये० । भीमाय आकाशमूर्तये० । पशुपतये यजमानमूर्तये० । महादेवाय सोममूर्तये० । ईशानाय सूर्यमूर्तये नमः ।। मूर्तयोष्टौ हरस्यैताः पूर्वादि क्रमयोगतः । आग्नेयान्ताः प्रयोज्यास्तु वेद्यां लिङ्गे शिवं यजेत् ।। एता वेद्यां पूज्या इति ।। अत्र प्रसिद्ध प्रागादिग्रहणमित्युक्तम् । परंचात्रयुक्तंतु पूज्यपूजकान्तरालस्थेतिविशेषः शान्तिसारे पदार्थादर्शेच ।। अत्र शूद्रस्याप्यधिकारः । शूद्रः कर्माणियो नित्यं स्वीयानि कुरुते प्रिये । तस्याहमर्चांगृह्णामि चन्द्रखण्डविभूषिते ।। नमोन्तेन शिवेनैव *स्त्रीणांपूजा विधीयते । स्वाहा प्रणव संयुक्तं शूद्रेमन्त्रं ददद्द्विजः ।। शूद्रोनिरयमाप्नोति ब्राह्मणः शूद्रतामियात् । इति स्कान्दात् । इत्थं तत्पूजनमन्त्रेषु प्रणवनिवृत्तिः एतेन प्रणव पूर्वक पञ्चाक्षरमन्त्रस्य शूद्रादीनामुपदेष्टारः श्रीमन्तो मदनमोहनमालवीया अपि प्रत्युक्ताः । तथाच व्यासस्मृतिः—ब्राह्मणक्षत्रियविशस्त्रयोवर्णा द्विजातयः । श्रुतिस्मृतिपुराणोक्त

* स्त्रीणां तु पार्थिवं लिङ्गं सभर्तॄणां विशेषतः । विधवानां निवृत्तानां रसलिङ्गं विशिष्यते ।। विधवानां प्रवृत्तानां स्फाटिकं परिकीर्त्तितम् । अत्र रसपदेन पारदं ग्राह्यमिति शैवसुधाकरे शैवागमे च ।।

धर्मयोग्यास्तुनेतरे ॥ शूद्रोवर्णश्चतुर्थस्तु वर्णत्वाद्धर्ममर्हति । वेदमन्त्र स्वधास्वाहावषट्कारादिभिर्विना ॥ इति ॥ व्यास-संहितापि—शूद्रोऽप्येवंविधः कार्यो विनामन्त्रेणसंस्कृतः । स्त्री-शूद्रयोरमुं दद्यान्मंत्रं प्रणव वर्जितम् । प्रणवोच्चारणाद् होमा-च्छालिग्रामशिलार्चनात् ॥ ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतां व्रजेदिति ॥ अत्र विशेषः शैवसुधाकरे ५म किरणे विश्वेश्वर संहितायां च—बेर मात्रे तु सर्वत्र पूज्यते देवतागणः । लिङ्गे चैव हि सर्वत्र कथं सम्पूज्यते शिवः ॥१॥ इत्थं शौनका-दिभिः सतिकृते प्रश्ने । सूत उवाच । शिवोहि द्विविधः प्रोक्तो निष्कलः सकलस्तथा ॥ निष्कलत्वान्निराकारं लिङ्गं तस्य सुसङ्गतम् ॥२॥ सकलत्वात्तथाबेरं साकारं तस्य सङ्गतम् ॥ अब्रह्मत्वाच्च जीवत्वात्तथान्ये देवता गणाः ॥३॥ सर्वे सकलमात्रत्वादर्च्यन्ते बेरमात्रके ॥ शिवस्योभयरूपत्वा-ल्लिङ्गे बेरे च पूजयेत् ॥ ४ । बेरं प्रतिमा* महाभारतेपि द्रोणपर्वणि अश्वत्थामानं प्रति व्यासेनोक्तम् ॥ देव-देवस्त्वमेयात्मा अजेयो विष्णुरव्ययः ॥ सर्वरूपं भवंज्ञात्वा लिङ्गेऽर्चयतितंप्रभुः ॥ तत्रैव कृष्णार्जुनयोर्गौरकथने—जन्मकर्म तपो योगास्तयोस्तव च पुष्कलाः ॥ आभ्यां लिङ्गेऽर्चितोदेव स्त्वयार्चायां युगे युगे ॥ इत्यादीनि शिवलिङ्ग पूजा प्रतिपादकानि सहेतुका निवचनानि शतशो हेमाद्र्यादि महीनिबन्धेषु शैवसुधाकरादि लघुनिबन्धेषु च विज्ञैर्विलोक-

---

* इन्द्रियायतनमङ्ग विग्रहौ क्षेत्रगात्रतनुभूघनास्तनूः । मूर्तिमत् करणकाय मूर्तयो बेर संहननदेह संचराः ॥ इति हेमचन्द्रकोशात् ॥ शरीरं विग्रहो देहो गात्रंभोगस्तनुस्तनूः ॥ अङ्गंकायो वपुर्वर्ष्मा मूर्तिर्बेरं कलेवरम् ॥ संहननंघनो बन्धः पुरः पिण्डं च पुद्गलं ॥ इति शारदीनाममाला कोशाच्च ॥ १ ॥

नीयानि ॥ दिङ्मात्रमिह दर्शितं ग्रन्थगुरुताभयेनेत्यलम् ॥ ◙ ॥

इदं पार्थिवपूजनं नित्यं काम्यं च । द्विविधत्वबोधकवचनानामुपलब्धेः ॥ ननु नित्यकर्मसुसंकल्पो विधेयो न वेतिचेत् । सत्यम् विधेय एवेति संस्काररत्नमालायां वीर मित्रोदयस्याह्निकप्रकाशे च–संकीर्त्य मासपक्षादीन्निमित्तानि तथैव च । इदं कर्मकरिष्येऽहमिति संकल्पमाचरेत् ॥ तत्र संकल्प प्रकारो मतभेदेनत्रिविधः । कौमारिलमते-तावत्सन्ध्या वन्दनादिषु नित्येषु कर्म्मसु अधिकार वाक्यचोदित फलाभावेपि मन्त्रलिङ्गार्थवादादि बहु वाक्य पर्यालोचनया "उपात्तदुरितक्षय" एव फलत्वेन परिकल्पित इति तदनुरोधाद् "उपात्तदुरितक्षयार्थं प्रातः सन्ध्या मुपासिष्ये" । ज्योतिष्टोमेन यक्ष्ये–इत्यादिरीत्या सर्वेषु-नित्यकर्मसु संकल्पः ॥ १ ॥ गुरुमते तु–"विधिसिद्धिरेव विधेः फलमिति" चोदित फलाभावेपि "विधिसिद्ध्यर्थं प्रातः संध्यामुपासिष्ये", ज्योतिष्टोमेन यक्ष्य इत्यादि रीत्या नित्येषु संकल्पः ॥ २ ॥ शारीरिकभाष्येतु "जन्माद्यस्य यतः" इति सूत्रे यतो वेत्वादि विषय वाक्य व्याख्याने ब्रह्मणः सकाशादेवप्रपञ्चजातमुत्पन्नं । यथा मृदः सकाशादुत्पन्नो घटः स्वोपादानां मृदमत्यक्त्वा जीवति प्रलीयमानोऽपि मृद्येव प्रलीयते । एवं ब्रह्मणः सकाशाज्जातं जगदपि ब्रह्मात्यक्त्वा जीवति प्रलीयमानं च ब्रह्मण्येव प्रलीयते । इत्युक्त्वोत्तरशास्त्रसंदर्भेण ब्रह्मणि समन्वयादिकं प्रतिपाद्य "ब्रह्मार्पण" बुद्ध्यैव कर्माणि कर्तव्यानीत्युक्तम् । एतन्मते "श्रीपरमेश्वर प्रीत्यर्थं प्रातः संध्यामुपासिष्ये" । ज्योतिष्टोमेन यक्ष्य इत्यादि रीत्या अत्र संकल्पो-विधेयः ॥ ३ ॥ इत्थं–किं वेदैः किं ततः शास्त्रैः किं तपोभिरथव्रतैः ॥ शिवः संपूज्यतां नित्यं चोपदेशोयमुत्तमः ॥ इति स्कान्दे ॥ भक्त्यैवैकमनाभूत्वा यावज्जीवं प्रतिज्ञया । अर्चयेत

महादेवं अपन्नोपि सदा बुधः । इति शिवधर्मे च। यावज्जीवं नित्यमिति श्रवणात् ॥ शिवलिङ्ग मनभ्यर्च्ययो भुङ्क्ते मोह-संगतः । स याति नरकं घोरं यावदा चन्द्रतारकम् ॥ इति शिवरहस्ये ॥ योन पूजयते लिङ्गं ब्रह्मादीनां प्रकाशकम् ॥ शास्त्रवित् सर्ववेत्ता च चतुर्वेदः पशुस्तु सः ॥ इति पाद्मे ॥ यस्य नास्ति गृहे नित्यं शिवलिङ्गार्चनं शिवे ॥ तद् गृहं चण्डि चाण्डालगृहमेव न संशयः ॥ इतीशान संहितायाम् । रौद्रलिङ्गं महाविष्णुर्भक्त्या शुद्धं च पार्थिवम् । चारुचित्रं समभ्यर्च्य परमं लब्धवान्पदम् ॥ १ ॥ ब्रह्मा सर्वजगत्कर्ता मृल्लिंगेशङ्करार्चनात् ॥ भारतीमाप्तवानाशु तस्मात् पूज्यं मही-मयम् ॥ २ ॥ मृण्मयं लिङ्गमभ्यर्च्य मरुतः सकला अपि ॥ लब्धवन्तः श्रियं पूर्णां तस्मात्पूज्यं महीमयम् ॥ ३ ॥ इति लैङ्गे ॥ मृण्मयंलिङ्गमभ्यर्च्य पुरा लक्ष्मीः प्रयत्नतः ॥ जाता सौभाग्य सम्पन्ना महादेवप्रसादतः ॥ इति सनत्कुमार संहितायां च ॥ तस्याकरणे प्रत्यवाय श्रवणात् । पुराण संहितादिषु विष्णु-ब्रह्मलक्ष्मी शक्रादि देवानामपि पार्थिवलिङ्गाराधनं नियमेन श्रूयते चेत्तदान्येषां प्राणिनां किमुतेति कैमुति कन्यायेन सिद्धेपि तदा-वश्यक कर्तव्यत्वे—सर्ववर्णाश्रमाणां हि कलौ पार्थिव मेव तु ॥ इति लैङ्ग वचनात्सर्वैरपि धीधनैर्वर्णाश्रमिभिः पुरुषार्थ चतुष्टय सिद्ध्यर्थं शीघ्रवरप्रदरूपि पार्थिवेश्वर चिन्तामणेः सदाशिव-परमेश्वरस्य प्रीत्यर्थं च पार्थिवलिङ्ग पूजनं कर्तव्यमित्युपपन्नम् ॥ एतद्विषयेत्वन्येविशेषाः काम्य पार्थिवपूजनप्रयोग पद्धतौ द्रष्टव्या इत्यलं पल्लवितेन ॥ ❖ ॥ अथ नित्यस्य पार्थिव पूजनस्य प्रयोगः ॥ अथ कर्ता ब्राह्ममुहूर्ते समुत्थाय सुप्रभाताष्टकादि स्तोत्राणि पठित्वा यथाविधि कृत शौचाचमन स्नानः संशुद्ध-पाणिपादः अहते धौतेवा वाससी परिधाय प्राङ्मुख उदङ्मुखो

वा सुखासनोपरि उपविश्य यज्ञोपवीती बद्धशिखः धृतभस्म-त्रिपुण्ड्रः परिहितरुद्राक्षमालः सन्ध्योपासनादि नित्यकर्माणि यथास्वशाखं कृत्वा कर्म्माङ्गाचमनं स्मार्तविधिना विधाय कृत पवित्रधारणः प्रणाना यम्य जलाक्षतादि गृहीत्वा दक्षिणपाणिना सङ्कल्पं कुर्यात् । ॐ अद्य शीघ्रवरप्रदरूपिणः श्रीपार्थिवेश्वर चिन्तामणेः साम्बसदाशिवदेवस्य प्रीतिपूर्वकं मम पुरुषार्थचतुष्टय सिद्धये अमुक गोत्रः अमुकप्रवरः अमुकशर्म्माहं श्रीपार्थिवलिङ्ग पूजनं करिष्ये ।। इति संकल्पं कृत्वा । तन्निर्विघ्नतानिष्पत्तये श्रीमहागणपतेः पूजनंविधाय तत्रस्वस्याधिकार सिद्धये तावत् ॐ नमः शिवाय इति यथाशक्ति पञ्चाक्षर मन्त्रं जपित्वा पुष्पदूर्वा-रक्तचन्दनाक्षतयुतेन जलेन "एहि सूर्य सहस्रांशो तेजोराशे-जगत्पते ।। अनुकम्पयमां देव गृहाणार्घ्यं दिवाकर" इति मन्त्रेण श्रीसूर्याय अर्घ्यं दत्वा । "नमः सुरारि हंत्रे च सोम सूर्याग्नि चक्षुषे ।। नमो दिव्याय व्योमाय सर्वतन्त्रमयाय च" ।। १ ।। "यस्योदयेनेह जगत्प्रबुध्यते प्रवर्ततेचाखिल कर्म-सिद्धये ।। ब्रह्मेन्द्र नारायणरुद्रवन्दितः सनः सदायच्छतु मङ्गलं रविः" ।। २ ।। इति प्रार्थयेत् ।। ततो ऋष्यादिकं स्मरेत् ।। अस्य श्रीपार्थिवेश्वर चिन्तामणि विधान मन्त्रस्य निग्रहानुग्रहकर्ता ब्रह्मा ऋषिः कामधुग्गायत्रीछन्दः शीघ्रवरप्रद-रूपी पार्थिवेश्वर चिन्तामणिर्देवता हौं बीजं ह्रीं शक्तिः नमः कीलकं मम पुरुषार्थ चतुष्टय सिद्धयर्थे जपे विनियोगः ।। निग्र-हानुग्रह कर्त्रे ब्रह्मणे ऋषये नमः शिरसि । कामदुग्गायत्र्यै छन्दसे नमो मुखे । शीघ्रवरप्रदरूपि पार्थिवेश्वर चिन्तामणये देवतायै नमो हृदि । हौं बीजाय नमः । गुह्ये । ह्रीं शक्तये नमः पादयोः । नमः कीलकाय नमः सर्वाङ्गे व्यापकं कुर्यात ।।१।। अथकरन्यासः ।। ॐ हौं ह्रीं सर्वज्ञ शिवाय अङ्गुष्ठाभ्यां

नमः । ॐ हौं हीं नित्यतृप्त शिवाय तर्जनीभ्यां स्वाहा । ॐ हौं हीं आनन्दबोध शिवाय मध्यमाभ्यां वषट् ॐ हौं हीं स्वतन्त्र शिवाय अनामिकाभ्यां हुं । ॐ हौं हीं नित्यालुप्त शिवाय कनिष्ठिकाभ्यां वौषट् । ॐ हौं हीं सर्वज्ञानन्तशक्ति शिवाय करतल करपृष्ठाभ्यां फट् ॥ इ० क० न्या० ॥ अथांगन्यासः ॥ ॐ हौं हीं सर्वज्ञ शिवाय हृदयाय नमः । ॐ हौं हीं नित्य तृप्त शिवाय शिरसे स्वाहा । ॐ हौं हीं आनन्दबोध शिवाय शिखायै वषट् । ॐ हौं हीं स्वतन्त्र शिवाय कवचाय हुँ । ॐ हौं हीं नित्या लुप्त शिवाय नेत्रत्रयाय वौषट् ॐ । हौं हीं सर्वज्ञानन्तशक्ति शिवाय अस्त्राय फट् ॥ इ० अ० न्या० ॥ ततः शमीदर्भा- श्वत्थविल्वानामन्यतरस्य मूलान्मृत्तिकामादाय । "सर्वाधारे धरे देवि, त्वद्रूपां मृत्तिकामिमां । लिंगार्थं वै प्रगृह्णामि, शोभनाभवसर्वदा" ॥ इति मन्त्रेण । ॐ गं गणपतये नमः । इति मन्त्रेण । गणेशमूर्तिं* मृदा विरच्य पात्रोपरि स्थापयेत् ॥ ततः शिवलिंगं विदध्यात् ॥ तद्यथा–ॐ हौं हीं जूं सः हराय नमः । इति पूर्वानीतोपस्थापति मृदाहरणम् ॥ १ ॥ ततस्तत्र "वं" इत्यमृतबीजेन शुद्धंजलं निक्षिप्य संपिण्ड्य च तेन सजल मृत्पिण्डेन ॐ हौं हीं जूं सः महेश्वराय नमः ।

---

* इह गणेश पूजनं सर्वकर्मस्वादौ कर्तव्यम् । निर्विघ्नार्थत्वात् । "न ऋते त्वत्क्रियते" इति मन्त्रलिङ्गात ॥ नार्चितो हि गणाध्यक्षो यज्ञादौ यत्सुरोत्तमाः। तस्माद्विघ्नं समुत्पन्नं तत्क्रोधजमिदं खलु। इतिपद्मपुराणाच्च । इत्थमेव संस्काररत्नमाला संस्कारप्रकाश शान्तिसारादिषु एतस्यावश्यकतया: कर्मादौ प्रतिपादनाच्चेति ॥ एक लिङ्गपूजनमेव मुख्यमिति पक्षाश्रयिभिरपि "वक्रतुण्ड महाकाय, कोटि सूर्य समप्रभ ॥ निर्विघ्नं कुरु मे देव, पार्थिवेश्वर पूजनम्" इति पुष्पाक्षतान्गृहीत्वा केवलं श्रीगणेशाय नमस्कारः कर्तव्योऽत्रैवेति ॥

इतिसंघट्टनम् ॥ २ ॥ मूलेन शिवलिंगं कृत्वा झटिति तन्मस्तके अक्षतान्निधाय । ॐ ह्रां ह्रीं जूं सः शूलपाणये नमः इति स्वस्यपुरतः पात्रोपरि स्थापयित्वा प्राणप्रतिष्ठां कुर्यात् ॥ अस्य श्रीप्राणप्रतिष्ठा मन्त्रस्य ब्रह्म विष्णु महेश्वरा ऋषयः ऋग्यजुः सामानि छन्दांसि प्राणाख्या देवता आं बीजं ह्रीं शक्तिः क्रों कीलकं प्राणप्रतिष्ठापने विनियोगः ॥ ब्रह्म-विष्णुमहेश्वरेभ्य ऋषिभ्यो नमः शिरसि । ऋग्यजुस्सामभ्य-श्छन्दोभ्यो नमः मुखे । चैतन्यरूपायै प्राणाख्यायै देवतायै नमः हृदये । आं बीजाय नमो गुह्ये । ह्रीं शक्तये नमः पादयोः । क्रों कीलकाय नमो नाभौ । प्राणप्रतिष्ठापने विनियोगाय नमः सर्वांगे ॥ इति व्यापकं कृत्वा यथा-संभवं पुष्पपत्र दूर्वादर्भाणामन्यतरेण पुरतः स्थितं शिव-लिंगं स्पृशन्—ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहं स्वाहा श्रीपार्थिवेश्वर चिन्तामणेः प्राणा इहप्राणाः ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहं स्वाहा श्रीपार्थिवेश्वर चिन्तामणेः जीव इह स्थितः । ॐ आं ह्रीं क्रों० पार्थिवेश्वर० सर्वेन्द्रियाणि इह स्थितानि । ॐ आं ह्रीं क्रों यं रं० पार्थिवेश्वर० त्वक्चक्षुः श्रोत्र रसनाघ्राण वाक् पाणि पाद पायूपस्थानि सर्वाणी-न्द्रियाणि इहागत्य सुखेन चिरं तिष्ठन्तु स्वाहा ॥ अत्र ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहं इत्येवं वा प्राणप्रतिष्ठा-पनमन्त्रः । इति सं० रत्नमालायाम् ॥ ज्ञानार्णवेतु-आं सोह मित्येतावतैव प्राणप्रतिष्ठोक्ता ॥ इति प्राणप्रतिष्ठां विधाय गर्भाधानादि १५ संस्कार सिद्ध्यर्थं १५ वारं ॐ इति प्रणवं जपेत् ततः क्रमेणास्य सर्वसंस्काराः संजाताः इति भावयेत् ॥ इति प्राणप्रतिष्ठाविधिः ॥ इत्थं प्राणप्रतिष्ठां विधाय ध्यानं कुर्यात् ॥ कर्पूरगौरं करुणावतारं

संसारसारं भुजगेन्द्रहारम् ।। सदावसन्तं हृदयारविन्दे भवं भवानी सहितं नमामि ।। १ ।। वन्दे महेशं सुरसिद्धसेवितं कल्प द्रुमैः पूजितपादपल्लवम् ।। पुत्रप्रदं भक्तजनैकवन्द्यं ध्याये च्छिवंकामदुघं प्रसन्नम् ।। २ ।। यो योगमाया हृदयेन पुंसां ज्ञानं विधत्तेऽखिलवस्तुनिष्ठं ।। तं विश्वनाथं कलिकल्मषघ्नं ध्याये-च्छिवं लिंगगतं स्वदेहे ।। ३ ।। इतिध्यात्वा१ । ॐ हौं हीं जूं सः पिनाकधृषे नमः ।। श्रीसाम्बसदाशिवेहागच्छ । इहसन्नि-हितोभव । इत्यावाहनम् ।। ४ ।। २ॐ हौं ३ पशुपतये नमः ।। इति स्नपनम् ।। ३ओं हौं ३ शिवाय नमः । इति गन्धाक्षत पुष्प विल्वपत्र दूर्वा धूप दीप नैवेद्य ताम्बूल पूगफलादीनि समर्प्य मूलमन्त्रेणैव नीराजनं पुष्पाञ्जलिं प्रदक्षिणां नमस्कारं च विधाय। वामावर्तेनैवद्यामष्ट मूर्तीः पूजयेत् ॥ तद्यथा ॐ हौं हीं जूं सः शर्वायक्षिति-मूर्तये नमः ।। १ ।। इतिपूर्वे । ॐ हौं ३ भवाय जल० नमः इतीशान्ये ।।२।। ॐ हौं ३ रुद्रायाग्नि मूर्तये० इति उत्तरे ।। ३ ।। ॐ हौं ३ उग्रायवायुमू० ।। इति वायव्ये ।। ४ ।। ॐ हौं ३ भीमाय आकाशमू० ।। इति पश्चिमे ।। ५ ।। ॐ

---

१-ध्यायेन्नित्यं महेशमिति वा ध्यानम् । इति रौद्रे शारदातिलके संरत्न-मालायां शान्तिसारे च ।। मूले रुद्रयामलोक्तं प्राचीन पद्धति समुद्धृतं च पद्यत्रयेण ध्यान विधानं मयालिखितम् ।। १ ।। अथेदानीं षोडशोपचाराः स्कान्दोक्ता अमी—ध्यानं च स्वासनं पाद्यमर्घ्यमाचमनीयकम् । स्नानं वस्त्रोपवीते च भूषणानि तथैव च ।। गन्धं पुष्पं तथा धूपं दीपं नैवेद्य मेव च (मन्त्र निवेदनम्) ।। प्रदक्षिणा नमस्कारौ ह्युपचारास्तु षोडश ।। इति ।।

२-अत्र स्नानात् पूर्वं मूल मंत्रेणैव आसनं पाद्यमर्घ्यमाचमनीयं च देयं इति सं० र० धृतो विशेषः समुचितो विधातव्यश्च ।। ३ ।। तथैव वस्त्रोपवीते पुष्पमाला च समर्पणीयेत्यपि विशेषस्तत्रैव ।।

हौं ३ पशुपतये यजमान मूर्तये० ॥ इति नैर्ऋते ॥ ६ ॥ ॐ हौं ३ महादेवाय सोममूर्तये० ॥ इति दक्षिणे ॥७॥ ॐ हौं ३ ईशानाय सूर्यमूर्तये नमः । इत्याग्नेय्याम् ॥ ८ ॥ इत्यावरण पूजां यथाशक्ति कृत्वा मूलमन्त्रं जपित्वा तर्पणं कुर्यात् ॥ ॐ शिवाय नमः शिवं तर्पयामि । ॐ भवाय नमः भवं तर्पयामि । ॐ उग्राय नमः उग्रं० । ॐ मृडाय नमः मृडं तर्पयामि । ॐ हराय नमः हरं० । ॐ शशिशेखराय नमः शशिशेखरं० । ॐ शङ्कराय नमः शंकरं तर्पयामि । ॐ अरूपाय नमः अरूपं० । ॐ बहुरूपाय नमः बहुरूपं० । ॐ विरूपाय नमः विरूपं० । ॐ विरूपाक्षाय नमः विरूपाक्षं० । ॐ विश्वरूपाय नमः विश्वरूपं । ॐ कपर्द्दिने नमः कपर्द्दिनं० । ॐ त्र्यम्बकाय नमः त्र्यम्बकं तर्पयामि ॥ अथ प्रार्थयेत् ॥ नमोस्त्वोङ्कार रूपाय नमोऽक्षर वपुर्भृते ॥ नमो नादात्मने तुभ्यं नमो विष्णु कलात्मने ॥ १ ॥ नमोस्तु लिङ्ग रूपाय रूपातीताय वै नमः ॥ त्वं माता सर्वलोकानां त्वमेव जगतः पिता ॥ २ ॥ त्वं भ्राता त्वं सुहृन्मित्रं त्वं प्रियस्त्वं पितामहः ॥ नमस्तेभगवन्रुद्र भास्करामित तेजसे ॥ ३ ॥ नमो भवाय देवाय रसानाम्पतये नमः ॥ सर्वाय क्षितिरूपाय सुराम्बुनिधये नमः ॥ ४ ॥ पशूनां पतये चैव पावकामित तेजसे ॥ भीमाय व्योमरूपाय सोमरूपाय ते नमः ॥ ५ ॥ महादेवाय सोमाय अमृताय नमोनमः ॥ उग्राय यजमानाय नमस्ते कर्मयोगिने ॥ ६ ॥ नमो भवाय रुद्राय शिवाय च नमोनमः ॥ ईशानाय वृषाङ्काय भीमाय च नमोनमः ॥ ७ ॥ महादेवाय गुप्ताय वासुदेवप्रियाय च ॥ वामदेवाय शान्ताय उमायाः पतये नमः ॥८॥ नमस्ते नीलकण्ठाय शितिकण्ठाय ते नमः ॥ गोपते शङ्करायाथ

सर्वदा सर्वदाय च ॥ ९ ॥ पूजयित्वा[1] शिवं प्रातः सायं बद्धाञ्जलिः स्थितः ॥ एकविंशति वाराणि पठते यो नरोत्तमः ॥ १० ॥ स पापैर्मुच्यते सर्वैः सर्वदेवैः सुपूज्यते ॥ स्तोत्रस्य पठनादेव देहपाते शिवं व्रजेत् ॥ ११ ॥ पार्थिवानां हि लिङ्गानां पूजनं यन्मयाकृतम् ॥ तेन मे भगवान् रुद्रो वाञ्छितार्थं प्रयच्छतु ॥१२॥ **इति स्तोत्रपठनेन संप्रार्थ्य** ॥ ॐ ह्रां ह्रीं जूं सः ओं नमः शिवाय प्रसन्नपारिजाताय स्वाहा ॥ **इति मूलमन्त्रः** ॥ इमं मन्त्रं प्रत्यहमष्टोत्तरसहस्रं १००८ अष्टोत्तरशतं १०८ वा **जपेत्** ॥ **जपान्ते** गुह्याति गुह्यगोप्तात्वं गृहाणास्मत्कृतं जपम् ॥ सिद्धिर्भवतु देवेश त्वत्प्रसादान्मयि स्थिरा ॥ **इति जपं निवेद्य पुनः प्रार्थयेत्** ॥ तावकस्त्वद्गतप्राणस्त्वच्चित्तोऽहं सदामृड ॥ कृपानिधे इतिज्ञात्वा भूतनाथ प्रसीद मे ॥ १ ॥ अज्ञानाद्य दिवा ज्ञानाज्जपपूजादिकं मया ॥ कृतं तदस्तु सफलं कृपया तव शङ्कर ॥ २ ॥ अहं पापी महान्नाथ पावनश्च महान् भवान् ॥ **इति विज्ञाय** देवेश यदिच्छसि तथा कुरु ॥ ३ ॥ **इति प्रार्थयित्वा अर्घं[2] प्रदक्षिणां विधाय नमस्कृत्य** सति

---

१-पूजिते प्रातः सायं च कृताञ्जलि पुटः स्थितः । प्रा० मूलपद्धतौ असौ पाठोऽत्र प्रामादिकः लेखक दोषेणेति सुधीभिश्चिन्त्यम् ॥

२-प्रदक्षिणा नमस्कार फलं तु सनत्कुमार संहितायाम् । प्रदक्षिणा नमस्कारौ सर्वाभीष्ट प्रदायकौ । पूजनान्ते सदा कार्यौ भोग मोक्षार्थिभिर्नरैः ॥ बृहन्नारदीयेपि । शिवं प्रदक्षिणी कृत्य सव्यासव्यविधानतः । यत्फलं समवाप्नोति तन्मेनिगदतः शृणु ॥ राजन्प्रदक्षिणैकेन मुच्यते ब्रह्महत्यया ॥ द्वितीयेनाधिकारित्वं तृतीयेनेन्द्रसम्पदम् ॥ प्राप्नोतीतिशेषः । कूर्म पुराणेत्र विशेषः ॥ प्रदक्षिणं द्विजः कुर्यात्पञ्च ब्रह्माणि वै जपन् ॥ पञ्चब्रह्माणि सद्योजातमित्यादयः ५ मन्त्राः ॥

संभवे। ओं ह्रौं ह्रीं जूं सः नमः शिवाय प्रसन्नपारिजाताय स्वाहा॥ अनेन मन्त्रेण देवस्याग्रे एकादशाहुतीर्जुहुयात् ॥ ततो अक्षतान् पुष्पाणि च गृहीत्वा, यथेदानीं च देवेश कृत्यार्थं तु समागतम् ॥ तथात्वया पुनर्देव समागन्तव्य मेव च ॥ ओं ह्रौं ह्रीं जूं सः महा-देवाय नमः ॥ इत्यक्षत पुष्पाणि शिवोपरि समर्प्य संहार मुद्रया "क्षमस्व" इति विसर्जनं कुर्यादिति सर्वत्र ज्ञेयम् ॥ इति नित्य पार्थिव पूजा प्रयोगः समाप्तिमगमत् ॥ संवत् १९९४ भाद्रकृष्ण २तीयायां चन्द्रवासरे ॥

॥ अथ हिन्दीभाषया पार्थिवपूजाविधिः ॥

आगम शास्त्र में तथा पुराण संहितावों में विशुद्ध मृत्तिका की शिव लिंग मूर्ति बनाकर नित्यप्रति पूजन करने का अधिक फल लिखा है। अनेक कामनावों की सिद्धि के लिये भी अनेक वस्तु के लिंगमूर्ति मेरुतन्त्र शान्तिसार शैवसुधाकरादि ग्रन्थों में बनाकर पूजा लिखी है और शीघ्रही उसके करने से कामना सिद्धि होती भी दिखाई देती है। परञ्च उसमें गणेश स्कन्द मूर्ति सहित शिवलिंग एकादश रुद्र समेत बनाये जाते हैं और वह काम्य पार्थिवपूजाविधि शास्त्रकारों ने तथा विशेष कर श्रीशंकर भगवान् ने जगदम्बिका सतीशिरोमणि पार्वती जी से कही है। यह सब प्रमाण हमारे काम्य पार्थिवपूजा प्रयोग में मिलेंगे। यहाँ नित्य पार्थिव

---

प्रदक्षिणा प्रकारः स्कान्दे। बृषभान्तरितोभूत्वा पीठकान्तरमेव च॥ प्रद-क्षिणां न कुर्वीत कुर्वन्विपदमश्नुते॥ सव्यासव्यस्वरूपं तु शैवसुधाकरे तत्रै-वोक्तं। स्थानेबृषस्य संकल्प्य बृषभादौप्रदक्षिणम। सव्येसव्यं विजानीयादप-सव्येऽपसव्यकम् ॥ १ ॥ वृषे चण्डे वृषे चैव सोमसूत्रे पुनर्वृषे॥ चण्डे च सोमसूत्रे च पुनश्चण्डे पुनर्वृषे॥ चण्डस्थानं शिवलिंगस्थानादैशा-नीदिक् ॥ वृषस्थानंलिंगात्पश्चिमतः । सोमसूत्रं त्वाग्नेयाम् । तदा




१।३।५।६ = वृषस्थानम् २।६।८ = चण्डस्थानं ॥ ४।७ = सोमसूत्र-स्थानं चास्मिंश्चक्रे ज्ञेयमिति-सम्प्रदायविदः ॥ इति अर्धं प्रदक्षिणाविधिः ॥

पजा को लिखते हैं। कर्त्ता ब्राह्ममुहूर्त्त[1] में शयन से उठकर सुप्रभाताष्ट-कादि प्रातःस्मरणीय स्तोत्रों का पाठ करै फिर यथाविधि मलमूत्रादि त्याग कर शौच आचमन स्नान करके हाथ पैर धोकर नवीन अहत वस्त्र या धोती उपन्ना रेशमी या सूत्र के बने पहिरकर पूर्व मुख या उत्तर मुख शुद्धासन में बैठकर यज्ञोपवीत को दक्षिण बाहु निकाल कर वाम स्कन्ध पर धारण कर शिखा में ग्रन्थि लगावै। तदनन्तर भस्म त्रिपुण्ड् लगा रुद्राक्षमाला धारण कर सन्ध्योपासनादि नित्यकर्मों को अपनी २ शाखा-नुसार करके कर्माङ्ग स्मार्तविधि से आचमन करै। फिर पवित्र धारण कर प्राणायाम करके जलाक्षत लेकर दक्षिण हस्त से संकल्प करै--ॐ अद्य

**शीघ्रवरप्रदरूपिणः श्रीपार्थिवेश्वर चिन्तामणेः साम्बसदाशिव देवस्य प्रीतिपूर्वकं मम ( स्वस्य ) पुरुपार्थ चतुष्टयसिद्धये अमुक गोत्रः अमुक प्रवरः अमुक शर्म्मा (वर्म्मा-गुप्तो-दासोनामा-नाम्नीवा ) अहं श्रीपार्थिवलिंग पूजनं करिष्ये । इ० सं० ॥**

इसको पढ़कर किसी पात्र में या शुद्ध स्थान में जलाक्षत छोड़ देवै। फिर जलाक्षत लेकर द्वितीय वार यह संकल्प करै। **तन्निर्विघ्नता-सिद्धये श्रीमहागणपतेः पूजनं करिष्ये । इ० द्वि० सं० ॥** इस

---

[1]तथाच विष्णुः-गृहमेधिनियत्प्रोक्तं स्वर्गसाधनमुत्तमं। ब्राह्मेमुहूर्त्तेचोत्थाय तत्सर्वंसम्यगाचरेत् ॥ १ ॥ उत्थायोत्थायबोद्धव्यं किमद्यसुकृतं कृतम् ॥ दत्तंवादापितं वापि वाक्सत्याचापिभाषिता॥ २ ॥ इति। अत्रकृतसुकृतादि चिन्तनं तदविरोधेनाग्रिमकरणार्थं । निष्ठाभविष्यदर्थिकेत्यपरे । इत्याह्निक प्रकाशे श्री मित्र मिश्रः ॥ इह भगवतामनुनापि विशेष उक्तः—ब्राह्मेमुहूर्त्ते बुध्येत धर्मार्थौचानुचिन्तयेत्। कायक्लेशांश्चतन्मूलान् वेदतत्वार्थमेव च ॥ उत्थाया-वश्यकं कृत्वा कृतशौचः समाहितः। पूर्वांसंध्यांजपंस्तिष्ठेत्स्वकालेचापरांचिरम् इति ॥ इह ब्राह्मो मुहूर्त इति रात्रेः पश्चिमोयामो ब्राह्ममूहूर्तः । ब्राह्मी भारतीतत् प्रबोधहेतुत्वात्। रात्रेस्तुपश्चिमोयामो मुहूर्तो ब्राह्म उच्यते इति पितामह स्मरणात् । इति स्मृतिचन्द्रिकायामुक्तत्वात् । प्रदोष पश्चिमौ यामौ वेदाभ्यासरतोनयेत् । यामद्वयंशयानोहि ब्रह्मभूयायकल्पते—इति-

संकल्प को कर यथाविधि श्री गणेशजी को पूजा करके अधिकार प्राप्ति के लिये यथाशक्ति प्रथम "ॐ नमः शिवाय" इस पञ्चाक्षर का जप करने के बाद पुष्प दूर्वा रक्तचन्दन मिलित जल से और इस मन्त्र से एहि सूर्य सहस्रांशो तेजोराशे जगत्पते। अनुकम्पयमां देव गृहाणार्घ्यं दिवाकर ॥ १ ॥ श्री सूर्य को अर्घ्य देकर प्रार्थना इन मन्त्रों से करै— नमः सुरारिहंत्रे च सोम सूर्याग्नि चक्षुषे ॥ नमो दिव्याय व्योमाय सर्वतन्त्रमयाय च ॥ १ ॥ यस्योदयेनेह जगत् प्रबुध्यते प्रवर्तते चाखिलकर्मसिद्धये। ब्रह्मेन्द्र नारायण रुद्रवन्दितः सनः सदाय-च्छतु मङ्गलंरविः ॥ २ ॥ इसके बाद विनियोग करने वाले ऋष्यादि का स्मरण कर जल छोड़ दे ॥ अस्य श्रीपार्थिवेश्वर चिन्तामणि विधानमन्त्रस्य निग्रहानुग्रहकर्ता ब्रह्माऋषिः कामधुग्गायत्रीछन्दः शीघ्रवरप्रदरूपी पार्थिवेश्वर चिन्तामणिर्देवता हौं वीजं ह्रीं शक्तिः नमः कीलकं मम "धर्मार्थकाममोक्षरूप" पुरुषार्थ चतुष्टय सिद्ध्यर्थे जपे विनियोगः ॥ अथाङ्गन्यासः। निग्रहानुग्रहकर्त्रे ब्रह्मणे ऋषये नमः इति शिरसि। कामधुग्गायत्र्यै छन्दसे नमो मुखे। शीघ्रवरप्रदरूपि पार्थिवेश्वर चिन्तामणये देवतायै नमः इति हृदि। हौं बीजाय नमः इ० गुह्ये। ह्रीं शक्तये नमः पादयोः

---

वद्‌तादत्तेणापितत्रप्रबोधोऽभ्यनुज्ञात इति मन्वर्थमुक्तावल्यां कुल्लूकभट्टेनोक्त-त्वाच्च ॥ १ ॥ परञ्च "रजनी प्रान्त्ययामार्धं ब्राह्मः समय उच्यते। स्वहितं-चिन्तयेःप्राज्ञस्तस्मिन्नुत्थायसर्वदा"। इति काशीखण्डे रात्रिपश्चिमयामा-र्धस्यापि ब्राह्ममुहूर्तत्वं बोध्यम् ॥ कार्याधिकत्वाल्पत्वयोरनयोर्व्यवस्थित-त्वान्नात्रमतानैक्यमात्रवादिनामकिंचित्कराणां विनोदावसर इति वीर मित्रोदैस्पष्टम् ॥ ☐ ॥ सुप्रभाताष्टकस्तोत्रं वामनपुराणे आह्निक प्रकाशे-चेदम् —ब्राह्मे मुहूर्ते प्रथमं विबुध्ये दनुस्मरे द्देववरान्मुनींश्च। प्राभातिकं मंगलमेववाच्यं, यदुक्तवान्देवपतिस्त्रिनेत्रः ॥ १ ॥ सुकेश्युवाच। किंतदुक्तं सुप्रभातं शङ्करेण महात्मना। प्रभातेयत्पठन्मर्त्यो मुच्यते पापबंधनात् ॥२॥ ऋषयऊचुः ॥ श्रूयतां राक्षसश्रेष्ठ सुप्रभातं सुरोदितम्। श्रुत्वास्मृत्वा

नमः कीलकाय नमः सर्वाङ्गे व्यापकं कुर्यात् ॥ १ ॥ अब विनियोग में पठित ऋषि आदि को पढ़ता हुवा जल स्पर्श पूर्वक प्रथम अङ्गन्यास कर करन्यास और षडंगन्यास फिर भी करै—ॐ हौं ह्रीं सर्वज्ञ शिवाय अंगुष्ठाभ्यां नमः। ॐ हौं ह्रीं नित्य तृप्त शिवाय तर्जनीभ्यां स्वाहा। ॐ हौं ह्रीं आनन्दबोधशिवाय मध्यमाभ्यां वषट्। ॐ हौं ह्रीं स्वतन्त्रशिवाय अनामिकाभ्यां हुं। ॐ हौं ह्रीं नित्यालुप्त शिवाय कनिष्ठिकाभ्यां फट्। इ० क० न्या० ॥ २ ॥ अथ द्वितीयो अंगन्यासः। ॐ हौं ह्रीं सर्वज्ञ शिवाय हृदयाय-नमः। ॐ हौं० नित्यतृप्त शिवाय शिरसे स्वाहा। ॐ हौं० आनन्दबोध शिवाय शिखायै वषट्। ॐ हौं० स्वतन्त्र शिवाय कवचाय हुं। ॐ हौं० नित्यालुप्त शिवाय नेत्रत्रयाय वौषट्। ॐ हौं० ह्रीं सर्वज्ञानन्तशक्ति शिवाय अस्त्राय फट् ॥ ३ ॥ इसके अनन्तर शमी कुश अश्वत्थ विल्ववृक्षों में से किसी एक तरुमूल से शुद्ध मृत्तिका लाकर पीस छान कर रक्खै। और यदि गङ्गादि नदियों के तीर पर उक्त पूजन करना हो तो जल के भीतर की बालू निकाल उससे वस्त्रादि के द्वारा जलांश दूर करना तथा पिण्डाकृति बनाकर किसी पत्ते या पात्र में रख लेवै। अब सर्व प्रथम आनीत मृत्पिण्ड से सुचारु

---

पठित्वा च सर्वपापैः प्रमुच्यते ॥ ३ ॥ ब्रह्मामुरारि स्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च ॥ गुरुश्च शुक्रः शनि राहु केतवः कुर्वंतु सर्वे मम सुप्रभातम् ॥ १ ॥ भृगुर्वसिष्ठः क्रतुरङ्गिराश्च मनुः पुलस्त्यः पुलहस्सगौतमः। रैभ्यो मरीचिश्च्यवनो ऋभुश्च कुर्वन्तु सर्वे मम सुप्रभातम् ॥ २ ॥ सनत्-कुमारः सनकः सनन्दनः सनातनोऽप्यासुरि पिंगलौ च ॥ सप्तस्वराः सप्त रसातलाश्च कुर्वन्तु सर्वे० ॥ ३ ॥ पृथ्वी सगन्धासरसास्तथाऽऽपः स्पर्शीच वायुर्ज्वलितं च तेजः ॥ नभः सशब्दं महता सहैव कुर्वन्तु सर्वे मम० ॥ ४ ॥ सप्तार्णवाः सप्तकुलाचलाश्च सप्तर्षयोद्वीप वराश्चसप्त। भूरादिकृत्वा भुवनानिसप्त कुर्वन्तु सर्वे मम सुप्रभातम् ॥ ५ ॥ इत्थं प्रभाते परमंपवित्रं पठेत्स्मरेद्वा शृणुयाच्चभक्त्या ॥ दुःस्वप्ननाशोऽनघ सुप्रभातं

१ गणेश मूर्ति बना करपात्रोपरि रखकर उनके मस्तक में प्रक्षालित अक्षत लगादे। उसके बाद शिवलिंग बनाना। उसमें भी—सर्वाधारे धरे-देवि त्वद्रूपांमृत्तिकामिमां। लिंगार्थं प्रतिगृह्णामि शोभनाभव सर्वदा। ॐ हौं ह्रीं जूं सः हराय नमः। इसको पढ़कर प्रथम लाई हुई मृत्तिका को हाथ में उठावै। उसमें "वं" इस अमृत बीज से शुद्ध जल मिलाकर अच्छी तरह जल मृत्तिका का सम्मेलन करता हुवा एक मृत्तिका का गोल पिण्ड बना—ॐ हौं ह्रीं जूं सः महेश्वराय नमः। इससे सुन्दर शिवलिंग रचकर शीघ्र ही मस्तक प्रदेश में कुछ अक्षत लगादे। बाद—ॐ हौं० शूलपाणये नमः इस मंत्र से अपने सम्मुख पात्र के ऊपर वस्त्र या विल्वपत्रादि रखकर पूर्व संघटित शिवलिंग को स्थापन करले। अथवा वामहस्तगत करतल ( गादी ) में विल्वपत्र के ही ऊपर उसे धारण करले। बाद प्राणप्रतिष्ठा यथाविधि करै। अस्य श्री प्राणप्रतिष्ठा मन्त्रस्य ब्रह्म विष्णु महेश्वरा ऋषयः ऋग्-यजुः सामानि छन्दांसि प्राणाख्या देवता आं बीजं ह्रीं शक्तिः क्रों कीलकं प्राण प्रतिष्ठापने विनि०॥ इसको पढ़कर जल छोड़कर अङ्गन्यास ४र्थ बार करै। ब्रह्म विष्णु महेश्वरेभ्य ऋषिभ्यो नमः शिरसि। ऋग्यजुः सामभ्यश्छन्दोभ्यो नमो मुखे। चैतन्यरूप

---

भवेच्चसर्वं भगवत्प्रसादात्॥६॥ ततः समुत्थायविचिन्तयेद्बुधो धर्मं तथार्थं च विहाय शय्याम्। उत्थायपश्चाद् हरिरित्युदीर्य्यगच्छेत्तदोत्सर्गं विधिं च कर्तुम्॥ ७॥ लोकेशचैतन्यमयादिदेव श्रीकान्त विष्णो भवदाज्ञयैव। प्रातः समुत्थाय तवप्रियार्थं संसारयात्रा मनुवर्तयिष्ये॥ ८॥ इति। अनुस्मरेदिति क्रियापदेनात्रप्रधानविधिर्वोध्यते "प्राभातिकं मङ्गलमेव वाच्यम्" इत्यनेन वाक्येन॥१॥ मातापितृ सहस्राणि पुत्रदार शतानि च॥ संसारेष्वनुभूतानि यान्तियास्यन्तिचापरे॥ १॥ हर्षस्थान सहस्राणि भय-स्थान शतानि च॥ दिवसे २ मूढ माविशन्तिन पण्डितं॥ २॥ ऊर्ध्वबाहु-र्विरौम्येष नच कश्चिच्छृणोति मे॥ धर्मादर्थश्चकामश्च सकिमर्थंन सेव्यते॥ ३॥ न जातुकामान्न भयान्नलोभाद् धर्मंजह्याज्जीवितस्यापि हेतोः॥ धर्मोनित्यः सुखदुःखेत्वनित्ये जीवोनित्यो हेतुरस्यत्व नित्यः॥४॥

प्राणाख्य देवतायै नमो हृदये । आँ बीजाय नमो गुह्ये । ह्रीं शक्तये नमः पादयोः । क्रों कीलकाय नमो नाभौ । प्राणप्रतिष्ठापने विनियोगाय नमः सर्वांगे । इस विधि से चतुर्थ बार अङ्गन्यास करके यथा सम्भव पुष्प पत्र दूर्वा कुश इनमें से किसी एक को दक्षिण हाथ में ग्रहण कर आगे स्थित शिवलिंग को स्पर्श करते हुवे इस मन्त्र को शनैः शनैः पढ़ै । मन्त्र—ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहं स्वाहा श्रीपार्थिवेश्वर चिन्तामणेः प्राणा इह प्राणाः ॥ ॐ आं ह्रीं क्रों० सोहं स्वाहा श्रीपार्थिवेश्वर० जीव इहस्थितः । ॐ आं ह्रीं क्रों० चिन्तामणेः सर्वेन्द्रियाणि इहस्थितानि । ॐ आं ह्रीं क्रों० चिन्तामणेः त्वक्चक्षुः श्रोत्र रसना घ्राण वाक् पाणि पाद पायूपस्थानि सर्वाणीन्द्रियाणि इहागत्यसुखेन चिरंतिष्ठन्तु स्वाहा ॥ अत्र ॥ आं ह्रीं क्रों यं रं लं वं शं षं सं हं हंसः सोहं इत्येवं वा प्राणप्रतिष्ठापन मन्त्रः ॥ इति संस्काररत्नमालायाम् ॥ ज्ञानार्णवेतु—आं सोहं इत्येतावतैव मन्त्रेण प्राणप्रतिष्ठोक्ता । [ इति प्राणप्रतिष्ठा ] को करके गर्भाधानादि १५ संस्कार सिद्ध्यर्थ १५ बार "ॐ" इस प्रणव मन्त्र को जप करना उसके वाद "इस लिङ्ग मूर्ति के

---

इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत् । स भारतफलं प्राप्य परंब्रह्माधि गच्छति ॥ ५ ॥ इति प्रभाताष्टकादि ॥ ❀ । ❀ ॥ प्रातः पदमत्र प्रभातपरम् । प्रगेप्रातः प्रभाते इत्यमरकोशात् ॥ यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः । इति वाक्ये अरुणोदयकाले प्रातः पदं प्रयुक्तवान्भगवान् कात्यायनः । तद्विशेषोक्तिर्ब्राह्मे—षट्पञ्चाशद् ५६ घटीः प्रातस्तत्तस्त्वेकाधिको५७ऽरुणः ॥ उषः कालोऽष्टपञ्चाशत् ५८ शेषः ५९।६० सूर्योदयः स्मृतः । इति षट्पञ्चाशद् घटीरारभ्य इत्यर्थः स्पष्टः ॥ एवमेव वीरमित्रोदयान्तर्गते आह्निकप्रकाशे आह्निकचन्द्रिकादौ च ॥ २ ॥ ब्राह्ममुहूर्ते शयनेकृते दोषं प्रायश्चित्तं चाह विष्णुः—ब्राह्ममुहूर्ते या निद्रा सा पुण्य क्षयकारिणी । तां करोति तु यो मोहात् पादकृच्छ्रेणशुध्यति ॥ इति ॥ अत्र पुण्यक्षयपदं पापपरं तदग्रे प्रायश्चित्तोपदेशादितिमित्रमिश्रः ॥ इसके

सब संस्कार हो गये" यह भावना हृदय में करनी चाहिये ॥ इति प्राण प्रतिष्ठा विधि ॥ इसके बाद पुष्प विल्वपत्र अञ्जलि में लेकर श्वास रोके हुये साम्ब सदाशिव जी का ध्यान करै—ॐ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदावसन्तंहृदयारविन्दे भवंभवानी-सहितं नमामि ॥ १ ॥ वन्दे महेशं सुरसिद्धसेवितं कल्पद्रुमैः पूजित पादपल्लवम् । पुत्रप्रदं भक्तजनैकवन्द्यं ध्यायेच्छिवं काम-दुघं प्रसन्नम् ॥ २ ॥ यो योगमाया हृदयेन पुंसां ज्ञानं विधत्ते-ऽखिलवस्तुनिष्ठम् । तं विश्वनाथं कलिकल्मषघ्नं ध्यायेच्छिवं लिङ्गगतं स्वदेहे ॥ ३ ॥ ध्याये शिवम् । इत्रि श्लोकयोरूहः कर्त्तव्योऽत्र ॥ ध्याये नित्यं महेशं रजतगिरिनिभं इति शारदातिलकोक्तं ध्यानं वात्रविधेयम् ॥ ॐ ॥ ॐ हौं हीं जूं सः पिनाकधृषे नमः । श्री साम्ब सदाशिव इहागच्छ । इह सन्निधो भव । इत्यावाहनम् ॥ उसके बाद मूलमन्त्र से पाद्य अर्घ्य आचमन देकर ॐ हौं ३ पशु-पतये नमः । इस मन्त्र से स्नान और मूलमन्त्र से वस्त्र यज्ञोपवीत अर्पण कर ॐ हौं ३ शिवाय नमः इस मन्त्र से चन्दन अक्षत पुष्प

---

आगे मलमूत्रादित्यागविधि इत्यादि हमारी लिखी "नित्यकर्मप्रयोगमाला" नाम की पुस्तक में देखना चाहिये। यहां पुस्तक विस्तार भय से नहीं लिखा ॥ इति ॥ अथावश्यकीय स्मार्ताचमन विधि इस तरह जानना चाहिये। इस विषय में महर्षि कात्यायन विरचित परिशिष्ट सूत्र प्रमाण रूप में प्रथम लिखते हैं। "प्रक्षालित पाणिपादः शुचौदेश उपविश्य नित्यं वद्धशिखी यज्ञोपवीती प्रागुदङ्मुखो वा भूत्वा जान्वोर्मध्येकरौकृत्वा अशू-द्रानीतोदकैर्द्विजातयो यथाक्रमं हृत्तालुकण्ठगैराचामन्ति। न भिन्नोष्ठेन न विरलाङ्गलिभिर्न तिष्ठन्नैवहसन्नापि फेनबुद्बुदयुतम् । ब्रह्मतीर्थेन त्रिः पिबे-द्द्विः परिमृजेत् । ब्राह्मणस्य दक्षिणहस्ते पंचतीर्थानि । अङ्गुष्ठमूलेब्रह्मतीर्थं कनिष्ठिकाङ्गुलिमूले प्रजापतितीर्थं तर्जन्यंगुष्ठमध्यमूले पितृतीर्थं । अंगुल्यग्रे देवतीर्थं मध्ये अग्नितीर्थमित्येतानि तीर्थानि भवन्ति ॥ २ ॥ प्रथमं यत्पि-बतितेनऋग्वेदं प्रीणाति द्वितीयं यत्पिबति तेन यजुर्वेदं प्रीणाति तृतीयं

माला विल्वपत्र दूर्वा तुलसी धूप दीप नैवेद्य ताम्बूल पूगफलादि अर्पण करना। तथा मूलमन्त्र से ही नीराजन पुष्पाञ्जलि प्रदक्षिणा और नमस्कार करके वामावर्त से उसी स्थान में श्रीशङ्कर की ८ मूर्तियों का पूजन करै। उनके नाम यह हैं—ॐ हौं ह्रीं जूं सः शर्वाय क्षितिमूर्तये नमः ॥ इति पूर्वे। ॐ हौं ३ भवाय जलमूर्तये नमः। इतीशान्ये। ॐ ३ रुद्रायाग्निमूर्तये० इत्युत्तरे। ॐ हौं ३ उग्राय वायुमूर्तये० इ. वायव्ये ॥ ४ ॥ ओं हौं ३ भीमाय आकाशमूर्तये० इति पश्चिमे ॥५॥ ओं हौं ३ पशुपतये यजमानमूर्तये० इति नैर्ऋते ॥६॥ ओं हौं ३ महादेवाय सोममूर्तये नमः इति दक्षिणे ॥७॥ ओं हौं ह्रीं जूं सः ईशानाय० सूर्यमूर्तये नमः। इत्याग्नेय्याम् ॥८॥ इस विधि से आवरण पूजा करके और मूलमन्त्र का यथाशक्ति जप कर तर्पण जल से करै उसके मन्त्र यह हैं—ॐ शिवाय नमः शिवं तर्पयामि। एवं सर्वत्र ॥ १ ॥ ॐ भवाय नमः भवं० ॥ २ ॥ ॐ उग्राय नमः ॥ ३ ॥ ॐ मृडाय० ॥ ४ ॥ ॐ हराय० ॥ ५ ॥ ॐ शशिशेखराय० ॥ ६ ॥ ॐ शंकराय० ॥ ७ ॥ ॐ अरूपाय० ॥८॥ ॐ बहुरूपाय० ॥ ९ ॥ ॐ विरूपाय० ॥ १० ॥ ॐ विरूपाक्षाय० ॥ ११ ॥ ॐ विश्वरूपाय० ॥ १२ ॥ ॐ कपर्दिने

---

यत्पिबति तेन सामवेदं प्रीणाति ॥ चतुर्थं यदि पिबेत्तेनाथर्ववेदेतिहासपुराणानि प्रीणाति। यदंगुलिभ्यः स्रवतितेन नागयक्षकुबेराः सर्वे वेदाः (देवाः) प्रीणन्ति यत् पादाभ्युक्षणं पितरस्तेन प्रीणन्ति। यन्मुखमुपस्पृशति अग्निस्तेन प्रीणाति। यन्नासिके उपस्पृशतिवायुस्तेन प्रीणाति। यच्चक्षुरुपस्पृशति सूर्यस्तेन प्रीणाति। यच्छ्रोत्रमुपस्पृशति दिशस्तेन प्रीणन्ति। यन्नाभिमुपस्पृशति ब्रह्मतेन प्रीणाति। यद्हृदयमुपस्पृशति तेन परमात्मा प्रीणाति। यच्छिरउपस्पृशति रुद्रस्तेन प्रीणाति यद्बाहू उपस्पृशति विष्णुस्तेन प्रीणाति ॥ मध्यमानामिकयामुखं। तर्जन्यङ्गुष्ठेननासिकां। मध्यमांगुष्ठेन चक्षुषी अनामिकांगुष्ठेन श्रोत्रं। कनिष्ठिकांगुष्ठेन नाभिम्। हस्तेन हृदयं। सर्वाङ्गुलिभिः शिर इत्यसौ सर्वदेवमयो ब्राह्मणोदेहिनामित्याह भगवान् कात्यायनः० ॥

नमः० ॥ १३ ॥ ॐ त्र्यम्बकाय नमः० ॥ १४ ॥ अथ प्रार्थना करै—ॐ नमोस्त्वोङ्कार रूपाय नमोऽक्षर वपुभृते । नमोनादात्मने तुभ्यं नमो विष्णुकलात्मने ॥ १ ॥ नमोस्तुलिङ्गरूपाय रूपातीतायवै नमः । त्वंमाता सर्वलोकानां त्वमेव जगतः पिता ॥ २ ॥ त्वं भ्राता त्वं सुहृन्मित्रं त्वं प्रियस्त्वं पितामहः । नमस्ते भगवन्रुद्रभास्करामित तेजसे ॥३॥ नमो भवाय देवाय रसानाम्पतये नमः । सर्वाय क्षितिरूपाय सुराम्बुनिधये नमः ॥४॥ पशूनां पतये चैव पावकामित तेजसे । भीमाय व्योमरूपाय सोमरूपाय ते नमः ॥ ५ ॥ महादेवाय सोमाय अमृताय नमो नमः । उग्राय यजमानाय नमस्ते कर्मयोगिने ॥ ६ ॥ नमो भवाय रुद्राय शिवाय च नमो नमः । ईशानाय वृषाङ्काय भीमाय च नमो नमः ॥ ७ ॥ महादेवाय गुप्ताय वासुदेवप्रियाय चं ॥ वामदेवाय शान्ताय उमायाःपतये नमः ॥ ८ ॥ नमस्ते नीलकण्ठाय शितिकण्ठाय ते नमः । गोपते शंकरायाथ सर्वदा सर्वदाय च ॥ ९ ॥ पूजयित्वा शिवं प्रातः सायं वद्धाञ्जलिः स्थितः । एकविंशति २१ वाराणि पठते यो नरोत्तमः ॥ १० ॥ सपापैर्मुच्यतेसर्वैः सर्वदेवैः सुपूज्यते । स्तोत्रस्यपठनादेव देहपाते शिवंव्रजेत् ॥ ११ ॥ पार्थिवानां तु लिङ्गानां पूजनं यन्मयाकृतम् ॥ तेन मे भगवान्रुद्रो

---

एवमेव त्रिः प्राश्यापोद्विरुन्मृज्य मुखमेतान्युपस्पृशेदित्यादिनामनुरपि प्राह ॥ इति ॥ अब इसके ही आधार पर स्मार्ताचमनविधि यह है। स्नानानन्तर शुद्ध दो वस्त्र धारण करके "ॐ नमः शिवाय" इस मन्त्र से भस्म त्रिपुण्ड्र और रुद्राक्षमाला धारण करके गायत्री मन्त्र से शिखा में ग्रन्थि दे। यदि प्रथम से ही लगी हो तो उसे ही स्पर्श कर "ॐ केशवाय नमः ॐ नारायणाय नमः ॐ माधवाय नमः" इन ३ मन्त्रों से तीनही बार हाथ पांव धोकर पवित्रदेश ( स्थान ) में पूर्वाभिमुख या उत्तराभिमुख बैठकर दोनों जानुवों के भीतर हाथ किये हुये जो जल शूद्र से न लाया गया हो उससे अंगुष्ठमूलगत ब्रह्मतीर्थ से ब्राह्मण हृदयगामी आचमन करे और

वाञ्छितार्थं प्रयच्छतु ॥ १२ ॥ इस स्तोत्र का पाठ करे ओं हौं हीं जूं सः ओं नमः शिवाय प्रसन्नपारिजाताय स्वाहा ॥ यही मूल मन्त्र है ॥ इसको प्रति दिन १००८। १०८ बार जपना चाहिये॥ जप समाप्त होने पर एक आचमनी जल दक्षिण हाथ में लेकर जप निवेदन करना इस मन्त्र से—गुह्यातिगुह्यगोप्तात्वं गृहाणास्मत् कृतं जपम् । सिद्धिर्भवतुदेवेश त्वत्प्रसादान्मयिस्थिरा ॥ इति ॥ फिर दोनों हाथ जोड़कर प्रार्थना करै—तावकस्त्वद्गतप्राणस्त्वच्चित्तोहं सदामृड । कृपानिधे इतिज्ञात्वा भूतनाथ प्रसीद मे ॥ अज्ञानाद्यदिवाज्ञानाद् जपपूजादिकं मया । कृतं तदस्तु सफलं कृपया तव शंकर ॥ अहं पापी महान्नाथ पावनश्च महान्भवान् । इति विज्ञायदेवेश यथेच्छसि तथा कुरु ॥ इन मन्त्रों से उसके बाद अर्घ परिक्रमा और नमस्कार करके यदि संभव हो तो अगले मन्त्र से यथाविधि स्थापित अग्नि में घृत से एकादश ११ आहुति होम करे, मन्त्र यह है—ओं हौं हीं जूं सः ओं नमः शिवाय प्रसन्नपारिजाताय स्वाहा ॥ इति मू, म. ॥ इसके बाद अक्षत पुष्प अञ्जलि में लेकर अग्रिम मन्त्र से विसर्जन करै—यथेदानीं च देवेश कृत्यार्थं ( कर्मार्थं ) च समागतम् । तथा त्वयो पुनर्देव समागन्तव्यमेव च ॥ ओं हौं हीं जूं सः महादेवाय

---

क्षत्रिय कण्ठ तक जानेवाले और वैश्य तालु तक जानेवाले पूर्वोक्त जलसे तीन २ वार आचमन करैं । बाद हाथ धोकर मध्यमा अनामिका से मुख । तर्जनी अंगुष्ठ से नासिका छिद्र । मध्यमा अंगुष्ठ से नेत्र । अनामिका अंगुष्ठ से कान । कनिष्ठिका अंगुष्ठ से नाभि । दक्षिणहस्त के करतल से हृदय । और सब अंगुलियों से शिर दक्षिण वाम बाहु तथा ऊरू स्पर्श करके सजल दोनों हाथों से शिर से चरण तक सर्वाङ्गों को स्पर्श करना चाहिये । इन सबका प्रयोजन प्रमाणसूत्र और मन्वादि स्मृति ग्रन्थों में स्पष्ट है । इस तरह कर्म्म के आदि अन्त में सर्वत्र स्मार्ताचमन करना चाहिये । इति स्मार्ताचमनविधिः समाप्तः । विशेष अन्य विषयों के लिये हमारी "नित्य-कर्मप्रयोगमाला" नामक पुस्तक देखना चाहिये ।

नमः । इति अक्षत पुष्पाणि शिवलिंगोपरि समर्पयित्वा संहार मुद्रया "क्षमस्व" इत्युक्त्वा विसर्जयेत् ।। निर्माल्यं गृहणीयाच्छ्रद्धयाघ्राणमेव ।।◻।।

इति हिन्दीभाषामयो नित्यपार्थिवपूजाविधिः समाप्तः ।।

——:*:——

## * श्रीशोऽव्यान्नः *

अथ वैदिकमन्त्रयुतः शिवार्चनविधिः । तत्र कर्ता अर्चनीय शिवमूर्तिसमीपे शुभासने उपविश्य आचम्य पवित्रपाणिः प्राणानायम्य संकल्पं कुर्यात् । ॐ तत्सदद्य अमुकगोत्रः अमुक शर्माहं श्रीसाम्ब सदाशिव देवप्रीतये वेदोक्तमन्त्रैः शिवार्चनं करिष्ये ।। इति संकल्प्य ।। ॐ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ।। इति ध्यानम् ।। ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं ।। उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ।। इत्यावाहनम् ।। ॐ त्र्यम्बकं यजामहे सुगन्धिं पति वेदनम् ।। उर्व्वारुकमिव बन्धनादितो मुक्षीय मामुतः ।। इत्यासनम् ।। ॐ नमोऽस्तुनीलग्रीवाय सहस्राक्षाय मीढुषे ।। अथो ये अस्यसत्वानोऽहं तेभ्योऽकरं नमः ।। इति पाद्यम् ।। ॐ गायत्री त्रिष्टुप् जगत्यनुष्टुप् पङ्क्त्या सह ।। बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तुत्वा ।। इत्यर्घ्यम् ।। ॐ नमस्ते रुद्र मन्यव उतोऽतइषवे नमः ।। वाहुभ्यामुतते नमः ।। इत्याचमनीयम् ।। ॐ नमः स्रुत्याय च पथ्याय च नमः काटयायचनीप्याय च नमः कूल्याय सरस्याचय नमो नादेयाय चव्वैशन्ताय च ।। इत्यनेन स्नानम् ।। शक्तौसत्यां स्वस्व मन्त्रैः क्षीरदधिघृतमधु शर्कराभिः व्यस्त समस्तविधिना स्नानमपि कारयेत् ।। ॐ यातेरुद्र शिवा तनूरघोरा पापकाशिनी ।। तयानस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ।। इति वस्त्रं कौपीनं च ।। ॐ प्रमुञ्च धन्वन इतिवा ।। ॐ नमो ह्रस्वाय च वामनाय च नमोबृहते च वर्षीयसे च नमोवृद्धाय च सवृधे च नमोऽग्र्याय च

प्रथमाय च ॥ इ० यज्ञोपवीतम् ॥ इयोरनयोरन्ते पत्रावरेणाचमनीयं दद्यात् ॥ ॐ असौयस्ताम्रोऽअरुणऽउतबभ्रुः सुमङ्गलः ॥ येचेमं ॐ रुद्राऽअभितोदिक्षुश्रिताः सहस्रशो वैषा ॐ हेडऽईमहे ॥ इतिगन्धम् ॥ ॐ नमः श्वभ्यः श्वपतिभ्यश्चवोनमः ॥ इतिवा ॥ ॐ नमोसुयन्त्रये वारि वस्कृतायोषधीनांपतये नमः ॥ ॐ नमस्तक्षभ्यः । इतिवा अक्षतान् ॥ ॐ नमो-राहिताय स्थपतये वृक्षाणांपतये नमः ॥ अनेन ॐ नमः पार्य्याय चावार्य्याय च नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्यायच कूल्यायच नमः शष्प्याय च फेन्याय च ॥ इ० पुष्पाणि दूर्वाः ॥ ॐ नमः पर्णायच पर्णशदाय च नमः ॥ इत्यनेन बिल्वपत्राणि तुलस्यादीनि च ॥ ॐ नमो हिरण्य बाहवे सेनान्ये दिशां च पतये नमः ॥ इ० धूपम् ॥ ॐ नमो वाल्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च ॥ इ० दीपम् ॥ ॐ नमो बभ्लुशायव्याधिनेऽन्नानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमः ॥ इ० नैवेद्यम् ॥ ॐ नमः सिकत्याय च प्रवाह्याय च नमः कि ॐ शिलाय च क्षयणाय च ॥ इ० आचमनीयं ॥ ( ततो मूलेन सतिसंभवे ताम्बूल फल दक्षिणा नीराजनं च कृत्वा ॐ इमा रुद्राय० तत्पुरुषाय० ॥ इति मन्त्रपुष्पांजलिम् ) । ॐ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः ॥ तेषा ॐ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ इ० प्रदक्षिणां ॥ ॐ याते रुद्रशिवातनूः शिवा विश्वाहा भेषजी ॥ शिवारुतस्य भेषजी तयानोमृडजीवसे ॥ ॐ नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च ॥ इति नमस्कारम् ॥ भवाय भवनाशाय महादेवाय धीमते । रुद्राय नीलकण्ठाय शर्वाय शशिमौलिने ॥ उग्रायोग्राघनाशाय भीमाय भयहारिणे ॥ ईशानाय नमस्तुभ्यं पशूनांपतये नमः ॥ ऋणरोगादि दारिद्र्यपापक्षुदपमृत्यवः ॥ भयशोकमनस्तापा नश्यन्तु मम सर्वदा ॥ इति प्रार्थयेत् ॥ अज्ञानाद्यदि वा ज्ञानाद् जप पूजादिकं मया ॥ कृतं तदस्तु सफलं कृपया तव शङ्कर ॥ इति क्षमस्व इति विसर्जयेत् ॥ इति श्रीवैदिक

मन्त्रयुतः शिवार्चनविधिः सम्पूर्णः ।।।। सं० १९९४ मार्गशीर्ष शुक्ल पञ्चदश्यां शुक्रवासरे लिखितो दुर्गाचरणशुक्लेन ।

माता लक्ष्मावती तातो गुमानीलाल शुक्लकः ।
भ्राता गङ्गासहायो मे लक्ष्मीनारायणो गुरुः ।।१।।

एतत्सुकृतनिचयैर्निगमागमवेदिना ।
दुर्गाचरणशुक्लेन पार्थिवार्चाविधिः कृतः ।। २ ।।

वेदाङ्कनन्देन्दुमिते (१९९४) सुवत्सरे
पक्षेऽर्जुने कार्तिकमासि मित्रभे ।
यमद्वितीया तिथि शुक्रवासरे
पूर्तिंगतं पार्थिवलिङ्ग पूजनम् ।।३।।

---



मुद्रक—पं० लालमणि शर्मा,
माडर्न प्रेस, कानपुर ।